# अथ सन्ध्याविधिः

## क) आसनशुद्धिः

ॐ **पृथिवीति** मन्त्रस्य मेरुपृष्ठऋषिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः।

**ॐ पृथ्वी त्वया धृता लोका देवि त्वं विष्णुना धृता।**
**त्वं च धारय मां नित्यं पवित्रं कुरु चासनम्॥**

## ख) भस्मधारणम्

**विधिः—**

दक्षिणहस्तेन भस्म गृहीत्वा वामहस्ते निधाय उदकं संस्मृश्य दक्षिणहस्तेन मर्दयेत्।

**ॐ अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, स्थलमिति भस्म, व्योमेति भस्म, सर्वꣳहवा इदं भस्म मन एतानि चक्षूंषि भस्मानि॥**

इति सम्मर्द्य अभिमन्त्रणं कुर्यात्—

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥**
**ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने।**
**सꣳसृज्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः॥**

**धारणम्—**

**ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम्।**
**यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम्॥**

## ग) पवित्रधारणम्

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥**

## घ) शिखाबन्धनम्

गायत्र्या शिखां बध्वा –

**ॐ चिद्रूपिणि महामाये दिव्यतेजः समन्विते।**
**तिष्ठ देवि शिखाबन्धे तेजोवृद्धिं कुरुष्व मे॥**
**ॐ मानस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः।**
**मानो वीरान्त्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥**

## ङ) आचमनम्

**ॐ ऋग्वेदाय स्वाहा। ॐ यजुर्वेदाय स्वाहा। ॐ सामवेदाय स्वाहा।** (इति वारत्रयमाचम्य। **ॐ अथर्ववेदाय नमः।**
इति हस्तप्रक्षालनम्)

## च) प्राणायामः

ॐ प्रणवस्य ब्रह्माऋषिः अग्निर्देवता दैवी गायत्रीच्छन्दः सप्तानां व्याहृतीनां क्रमेण विश्वामित्र–जमदग्नि–भरद्वाज–गौतमाऽ–त्रि–वसिष्ठ–कश्यपा ऋषयः अग्नि–वायु–सूर्य–बृहस्पति–वरुणेन्द्र–विश्वेदेवा देवताः गायत्र्युष्णिग्-अनुष्टुब्-बृहती-पङ्क्ति–स्त्रिष्टुब्जगत्यश्छन्दांसि तत्सवितुरित्यस्य विश्वामित्र ऋषिः सविता देवता गायत्रीच्छन्दः आपोज्योतिरित्यस्य प्रजापतिर्ऋषिः ब्रह्माग्नि–वायु–सूर्या देवता यजुश्छन्दः सर्वेषां प्राणायामे विनियोगः।

**ॐ भूः। ॐ भुवः। ॐ स्वः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यम्। ॐ तत्सवितुर्वरेण्यम्० । ॐ आपो ज्योती रसोमृतं ब्रह्म भूर्भुवः स्वरोम्॥**

## छ) मार्जनम्

ॐ **आपो हि ष्ठेति** तिसृणां सिन्धुद्वीपऋषिः आपो देवता गायत्री छन्दः मार्जने विनियोगः।

**ॐ आपो हि ष्ठा मयो भुवस्तानऽऊर्जे दधातन। महे रणाय चक्षसे॥**
**ॐ योवः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥**
**ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥**

## ज) अघमर्षणम्

ॐ **द्रुपदादिवे**त्यस्य कोकिलराजपुत्र ऋषिः आपो देवता अनुष्टुप्छन्दः अघमर्षणे विनियोगः।

**ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव। पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः॥**

## झ) सूर्यार्घ्यः

ॐ भूर्भुवः स्वरिति महाव्याहृतीनां परमेष्ठी प्रजापतिर्ऋषिः अग्निवायुसूर्या देवताः, गायत्र्युष्णिगनुष्टुभश्छन्दांसि, तत्सवितुरित्यस्य विश्वामित्रऋषिः, सविता देवता गायत्रीछन्दः अर्घ्यदाने विनियोगः।

**ॐ भूर्भुवः स्वः ॐ तत्सवितु०।**
**इदमर्घ्यं समर्पयामि भगवते ब्रह्मस्वरूपिणे सूर्यनारायणाय नमः।**
**एहि सूर्य सहस्रांशो तेजोराशे जगत्पते।**
**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर॥**

इति वारत्रयम् अर्घ्यं दद्यात्।

**(सायं विष्णुस्वरूपिणे/मध्याह्ने शिवस्वरूपिणे सूर्यनारायणाय नमः इति)**

## ञ) सूर्योपस्थानम्

ॐ उद्वयमुदुत्यमिति द्वयोः प्रस्कण्वऋषिः सूर्यो देवता अनुष्टुप्छन्दः चित्रन्देवानामित्यस्य कुत्साङ्गिरसऋषिः सूर्योदेवता त्रिष्टुप्छन्दः तच्चक्षुरित्यस्य दध्याङ्ङाथर्वणऋषिः सूर्योदेवता उष्णिक्छन्दः सूर्योपस्थाने विनियोगः।

**ॐ उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम्।**
**देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्।**
**उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः।**
**दृशे विश्वाय सूर्यम्॥**
**चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः।**
**आप्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्यऽआत्मा जगतस्तस्थुषश्च॥**
**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्॥**

## ट) गायत्रीषडङ्गन्यासः

**तत्रादौ करन्यासः —**

**ॐ भूः** अङ्गुष्ठाभ्यां नमः । **ॐ भुवः** तर्जनीभ्यां नमः । **ॐ स्वः** मध्यमाभ्यां नमः । **ॐ तत्सवितुर्वरेण्यम्** अनामिकाभ्यां नमः । **ॐ भर्गो देवस्य धीमहि** कनिष्ठिकाभ्यां नमः । **ॐ धियो योनः प्रचोदयात्** करतलकरपृष्ठाभ्यां नमः ।

**अथ अङ्गन्यासः —**

**ॐ भूः** हृदयाय नमः । **ॐ भुवः** शिरसे स्वाहा । **ॐ स्वः** शिखायै वषट् । **ॐ तत्सवितुर्वरेण्यम्** कवचाय हुम् । **ॐ भर्गो देवस्य धीमहि** नेत्रत्रयाय वौषट् । **ॐ धियो योनः प्रचोदयात्** अस्त्राय फट् ।

## ठ) गायत्र्यावाहनम्

ॐ तेजोसीत्यस्य परमेष्ठी प्रजापतिर्ऋषिः आज्यं देवता जगती छन्दः यजुर्गायत्र्यावाहने विनियोगः ।

**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामसि प्रियन्देवानामना–धृष्टन्देवयजनमसि ॥**

## ड) गायत्र्युपस्थानम्

ॐ तुरीयपदस्य विमल ऋषिः परमात्मा देवता गायत्री छन्दः गायत्र्युपस्थाने विनियोगः ।

**ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पदपदसि न हि पद्यसे ।**
**नमस्ते तुरीयाय दर्शताय पराय परो रजसेऽसावदोमा प्रापत् ॥**

## ढ) गायत्रीध्यानम्

ॐ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैः
युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वात्मवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशा शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

**ध्यानानन्तरम्(प्रातःकालिकं ध्यानम्)–**

ब्रह्माणी चतुरानना-क्षवलयं कुम्भं करैः स्रुक्स्रुवौ
बिभ्राणा-रुणकान्ति-रिन्दुवदना ऋग्रूपिणी बालिका ।
हंसा-रोहण-केलिरम्बर-मणेर्बिम्बाञ्चिता भूषिता
गायत्री हृदि भाविता भवतु नः सम्पत्समृद्ध्यै सदा ॥

**तथा (मध्याह्नकालिकं ध्यानम्)–**

रुद्राणी नवयौवना त्रिनयना वैयाघ्रचर्माम्बरा
खट्वाङ्ग-त्रिशिखा-क्षसूत्रवलया-भीतिर्दधानाम्बिका ।
विद्युत्पुञ्ज-जटाकलाप-विलसद्-बालेन्दुमौलिः सदा
सावित्री वृषवाहना सिततनुर्ध्येया यजूरूपिणी ॥

**तथा (सायङ्कालिकं ध्यानम्)–**

वृद्धा नीलघन-प्रभा-परिलसत्-पीताम्बरा भूषिता
दिव्यै-राभरणै-रथाङ्गकमले शङ्खं गदां बिभ्रती ।
तार्क्ष्यस्कन्धगता समस्त-जगदा-राध्या परा वैष्णवी
ध्येया चैव सरस्वती भगवती सामस्वरूपा सदा ॥

## त) मुद्राप्रदर्शनम्

सुमुखं सम्पुटं चैव विततं विस्तृतं तथा ।
द्विमुखं त्रिमुखं चैव चतुष्-पञ्चमुखं तथा ॥
षण्मुखाऽधोमुखं चैव व्यापकाञ्जलिकं तथा ।
शकटं यमपाशं च ग्रथितं चोन्मुखोन्मुखम् ॥
प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो वराहकम् ।
सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥

## थ) गायत्रीजपः

ॐ प्रणवस्य ब्रह्मा ऋषिः परमात्मा देवता गायत्रीछन्दः, व्याहृतीनां प्रजापतिर्ऋषिः अग्निवायुसूर्या देवताः गायत्रीछन्दः तत्सवितुरित्यस्य विश्वामित्र ऋषिः सविता देवता गायत्रीछन्दः सर्वपापक्षयार्थे गायत्रीमन्त्रजपे विनियोगः ।

**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**
**धियो योनः प्रचोदयात् ॥**

## द) उत्तराङ्गमुद्राप्रदर्शनम्

सुरभिर्ज्ञानवैराग्यं योनिः शङ्खोऽथ पङ्कजम् ।
लिङ्गं निर्वाणकं चैव जपान्तेऽष्टौ प्रदर्शयेत् ॥

## ध) जपसमर्पणम्

**ॐ देवा गातुविद** इत्यस्य मनसस्पतिर्ऋषिः वातो देवता विराट् छन्दः जपनिवेदने विनियोगः ।

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित । मनस्पतऽइमन्देव यज्ञ६ स्वाहा वातेधाः ॥**

अनेन प्रातः (मध्याह्न/सायम्) सन्ध्याङ्गभूतेन(अमुकसंख्याकेन) गायत्रीमन्त्रजपाख्येन कर्मणा श्रीभगवान् ब्रह्मस्वरूपी (शिवस्वरूपी/विष्णुस्वरूपी) श्रीसूर्यनारायणः प्रीयताम् न मम ॥

## न) सन्ध्याविसर्जनम्

**ॐ उत्तरे शिखरे** इत्यस्य कश्यपऋषिः सन्ध्यादेवता अनुष्टुप् छन्दः सन्ध्याविसर्जने विनियोगः ।

**ॐ उत्तरे शिखरे देवि भूम्यां पर्वतमस्तके ।**
**ब्राह्मणेभ्यो विनिर्मुक्ता गच्छ देवि यथासुखम् ॥**

**ततः शिखामुक्तिः –**

**ब्रह्मपाशसहस्रेण रुद्रशूलशतेन च ।**
**विष्णुचक्रसहस्रेण शिखामुक्तिं करोम्यहम् ॥**

इति शिखाग्रन्थिं निर्वर्त्य पुनस्तूर्ष्णीं शिखां बध्नीयात् ॥

॥ इति सामान्यसन्ध्याविधिः ॥